यस्योत्क्षिप्ता भवेत् पार्ष्णिरङ्गुष्ठः प्रसृतस्तथा ।
अङ्गुल्यन्या[1]ऽञ्चिता स स्यात् पादोऽग्रतलसञ्चरः ॥१०३॥

इति अग्रतलसञ्चरः ।

यदि पादतलाग्रेण स्थित्वा भूमौ निपात्यते ।
अस[क्ृ]द्वा सकृत् पार्ष्णिर्भवेदुद्घाटितस्तदा ॥१०४॥

इति उद्घाटितः । इति षड्विधचरणाः ।

## अथ चारी

चरणैकेन चारी[2] स्यात् करणन्त[द्]द्वयेन च ।
त्रिभिश्च करणैः खण्डो मण्डलञ्च त्रिखण्डकैः ॥१०५॥

### [ चारीभेदाः ]

चारी द्विधेति विज्ञेया भौमी चाऽऽकाशिकी परा ।
देशी-मार्गीविभेदेन चतुःषष्टिरितीरिता ॥१०६॥

### [ तत्र देशीषु भौम्यश्चार्यः ]

समपादौ समनखौ निरन्तरतया[3] स्थितौ ।
स्थानेन समपादेन समपादा तदोदिता ॥१०७॥ इति समपादा ।
स्थितावर्ता च चरणं चरणान्तरमागतम् ।
गत्वाऽग्रतलसञ्चारे विश्लिष्टं पार्श्वसंस्थितम् ॥१०८॥ इति स्थितावर्ता
यदाऽग्रतलसञ्चारं प्राग्देशोद्धृत यत्र च (?) ।
श[4]कटास्या तदा चारी श[5]कटास्येव निर्मिता ॥ इति शकटास्या ।
भूमिं निकुट्टयेत् सा तु[6]विच्यवा[7] कथिता बुधैः ॥ इति विच्यवा ।

1. M. ऽञ्चि । 2. M. री । 3. वरा । 4. M. स । 5 M. ष ।
6 M. त्तौ द्र । 7. N. S. विच्यवाचा, विच्यवाह् ।

चरणौ स्वस्वपार्श्वेन स्वं स्व पार्श्वमुपागतौ ।

मास[1]तालान्तरेणैव भवेदध्यर्धिका तदा ॥१११॥ इति अध्यर्धिका ।

तालमात्र,पुरो गत्वा द्वितालं पृष्ठमागतः ।

दक्षवामाङ्घ्रिणा किञ्चिदपसृत्यापसर्पणैः ॥[2]

चारी चापगतिः प्रोक्ता किञ्चिदुल्काति[2]पूर्विका ॥ इति चापगतिः ।

किञ्चिदुत्प्लुत्य चरणौ यत्राग्रतलसंचरौ ।

पर्यायेण निपततः[3] सैलकाक्रीडिता मता ॥११३॥ इति एलकाक्रीडिता

अङ्घ्र[4]रल्पा[5]न्तरे न्यस्य पादा[6]ग्रे तलसञ्चरे ।

जङ्घायां स्वस्तिकं,कृत्वाऽपसृत्य[7]श्चापसर्पणैः[8] ।

समोसटितमत्ताली[9] चारी स्यान्मध्यमे मदे ॥ इतिसमोसरितमत्तली

जङ्घास्वस्तिकसंयुक्तौ पादौ तिर्यञ्च(?)गामिनौ ।

घूर्णश्चोप्सृतः सा[10] स्यान्मत्तली तरु[11]णे मदे ॥११५॥ इति मत्तली ।

समाङ्घ्र[12]रग्रपृष्ठाभ्यामन्योग्रतलसञ्चरः ।

निघृष्टचरणो यत्र क्रमात्तामडितां[13]विदुः ॥११६॥ इति अडिता ।

निषण्णोरुसमो वामो दक्षिणस्तु प्रसारितः ।

चाण(?)तालान्तरे तिर्यग् यस्या सा स्यन्दिता स्मृता ॥ इति स्यन्दिता ।

चरण चारविपर्यासात् सैवाप[14]स्यन्दिता मता ॥ इति अपस्यन्दिता

1 M. चै । 2. दुल्लुति' इति स्यात् । 3. M पर्यासो निपति' ।
4 M न्घे । 5 M ल्प । 6 M द । 7 M न्र ।
8 M ग्रेम् । 9 N S. समोत्सारितमत्तल्ली, समोत्सारितमत्तल्ली इति वा ।
10 M स्या । 11 M न । 12. M. घ्रे ।
13. N S अडिता । 14 M. य ।

ऊरुयुग्मस्य चलनं जङ्घास्वस्तिकसंयुतम् ।
सा बद्धाऽभि[1]हिता चा[2]री पादाग्रे मण्डलभ्रमः ॥११९॥ इति बद्धा ।
वक्षसि मुष्टि[3]हस्तोऽन्यो यथाशो[4]भं तथा भवेत् ।
पादोऽग्रतलसञ्चारी[5] चारी स्याज्जनिता मता[6] ॥ इति जनिता
अन्योन्यपादजनितः पार्ष्णिपादाग्रसञ्चरः ।
विपर्यासं यदा कृत्वा ऊरूद्वृत्ता तदोदिता ॥१२१॥ इति ऊरूद्वृत्ता

इति भौमचार्यः ॥

॥ अथ आकाशचार्यः ॥

किञ्चित् प्रसार्य चोत्क्षिप्य गुल्यो (?) न्याङ्घ्रि[7] निपातयेत् ।
तोलान्तरचतुष्केण अतिक्रान्ता प्रकीर्तिता[8] ॥ इति अतिक्रान्ता
चारी बद्धा[9] विधेयादावुद्वृत्याङ्घ्रिश्च कुञ्चितम् ।
पार्श्वे निकुट्टयेच्चा[10]री ह्य[11]पक्रान्ता तदोदिता ॥ इति अपक्रान्ता ।
नितम्बक्षेत्रपर्यन्तं स्वादि (?) चरणकुञ्चितम् । ॰
पार्ष्णी[12]चेत् पातयेद् भूमौ पार्श्वक्रान्ता तदा भवेत ॥१२४॥
इति पार्श्वक्रान्ता ।
वक्रं चरणमुत्क्षिप्योत्प्लुत्य[13]भूमौ निपातितम् ।
तदा मृगप्लुता चारी अन्याङ्घ्रिरेव[14]मेव चेत् ॥ इति मृगप्लुता ।

1. M. धाग । 2. M. च । 3. M ष्टि । 4 M, सो ।
5. M रो । 6 M. ता । 7. M. घ्रे । 8. M. मचोर्तनम् ।
9 M. ध्वा । 10 M. चा । 11. M. म । 12. M. पार्ष्णा ।
13 M मुत्क्षिप्ते प्लुत्य । 14. A M. एव ।

वक्रितो[त्]क्षिप्तचरणो जानु स्तन[1]समं भवेत् ।
स्तब्धी[2]कृतोऽग्रचरण ऊर्ध्वजानुस्त[3]दादिशेत् ॥ इति ऊर्ध्वजानु[ः] ।
पश्चात्[4] प्रसारिताङ्घ्रि[5]श्चेदन्योन्या[6]भिमुखं तलम् ।
पार्ष्णि[ः] कृता[7]स्वपार्श्वे भून्यस्ताऽला[ता] तदा स्मृता ॥१२७॥
इति अलाता ।

वक्रितो[त्]क्षिप्तचरणं प्रसार्याग्रे च पातयेत् ।
सूची चारीति विज्ञेया तज्ज्ञैश्चातिमनोहरा ॥१२८॥ इति सूची ।
वक्रितं[9]चरणं पृष्ठे नीत्वा पार्श्वस्फि[10]र्ज स्पृशेत् ।
पश्चादग (?) तले भूमौ सोक्ता नूपुरपादिका ॥ इति नूपुरपादिका ।
वक्रि[11]तं चरणं[12] धृत्वा[13] दोलयित्वा च पार्श्वयोः ।
दोलापादा तदा चारी द्वितीयमेवमेव चेत् ॥१३०॥ इति दोलापादा
चरणौ नूपुरौ न्यस्य अग्रे[14] शीघ्रं प्रसार्य च ।
स्वदेहाभिमुखं चारी दण्डपादा[15] तदा स्मृता ॥ इति दण्डपादा ।
पृष्ठतो वेल्लितं[16]स्पृष्ट शिरो भ्रान्ता (?) च सर्वतः ।
पृष्ठतश्चरणो चल विद्युद्भ्रान्ता भवेदसौ ॥१३२॥ इति विद्युद्भ्रान्ता
अतिक्रान्तगतं पादं लासस्योरोविवर्तनम् ।
कृत्वा पादान्त[17]गतलभ्रमणे भ्रमरी मता[18] ॥१३३॥ इति भ्रमरी

1. M. नु । 2. M. द्री । 3. M. न्व ।
4. M. श्चा । 5. M. घ्रे । 6. M. भा ।
7. M. त्वा । 8 M. व्य । 9. M. ता । 10. M. फि ।
11. M. कृ । 12. M. णे । 13. त्य । 14. M. म । 15. M. त ।
16. M. त । 17. M. ल । 18. M. न. ।

पार्ष्णिमूलेऽन्यपादाग्रं कृत्वा त्रिकविवर्तनम् ।
भुजङ्गत्रासिता सा स्यात् कुर्याज्जानु स्वपार्श्वगम् ॥ इति भुजङ्गत्रासित
लता[1] हस्तकरोत्क्षिप्त[2]वक्रितं चरणं नयेत् ।
पार्श्वान्तरं ततो जङ्घां स्वस्तिकीकृत्य पातयेत्[3] ॥ इति आक्षिप्ता ।
विश्लिष्टजङ्घयोः[4] कृत्वा स्वस्तिकन्तस्य कुञ्चितः ।
पादः प्रसारितो वक्रः स्वपार्श्वस्थोपयातयोः[5] ।
पार्ष्ण्यां पार्ष्णिक्षरक्षेत्रे यत्राविद्धा[6]भवत्यसौ ॥ इति आविद्धा[7] ।
आविद्धापादमन्योन्यप्रदेशस्थानपार्ष्णिकम् ।
कृत्वोत्प्लुत्य भ्रमरकं यत्वा(?) यत्र निपातयेत् ।
तथान्यं पादमुद्धृत्य सोद्धृता चारिका स्मृता ॥१३७॥ इति उद्धृता

[ इति आकाशचार्यः ]

इति मार्गचार्यः[8]

अथ देशीचार्यः[9] ॥ [ तत्र भौम्यः ]

स्थित्वा स्वस्तिकबन्धेन पार्ष्ण्योः प्रपदयोस्तथा ।
रेचितौ चरणौ यत्र सोक्ता नूपुरविधिका ॥ इति नूपुरविधिका ।
वर्धमाने स्थितौ स्थाने वामदक्षिणतस्तथा[10] ।
सरतोऽद्भुतमानेन पादौ तिर्यङ्मुखा तदा ॥ इति तिर्यङ्मुखा चारी ।

1. M तां । 2 M स । 3. M यो । मम चेदऽप्यशुस्तुदिव इव भावि । 4 M यो । 5 M यो । 6. M धा । 7. M द्धा । 8. M. र्यो । 9. M र्यो । 10 M तोव ।

नन्द्यावर्तौ स्थितौ पार्ष्णिपादाग्ररेचितौ पुनः ।
[पुनः] प्रसारितौ यस्य सामराला (?) विधीयते ।
नन्द्यावर्तस्थयोरङ्घ्र्यो[1]स्तिर्यक्सृत्या कुलीरिका ॥ इति कुलीरिका
जङ्घावर्तस्थपादाभ्यां पश्चात्सृत्या तु कातरी[2] ॥ इति कातरी ।
कुञ्चिते स्वस्तिकीकृत्य[3] वलितान्ते तले यदा ।
अल्पमुत्प्लुत्य[4] निपतेद्ध[5]रिणत्रासिको[6]दिता ॥इति हरिणत्रासिका
भूमिं घृष्ट्वा वहिर्नी[7]त्वा व्यावर्तेते[8] शनैः क्रमात् ।
चरणौ यत्र तामाहुरर्ध[9]मण्डलिकां बुधाः[10] ॥ इति अर्धमण्डलिका
इतश्चेतश्च चरणौ स्थापयेन्न विशे [त्] स्थले[11] ।
मत्तवद् यत्र तामाहुश्चारी[12] धीरा मदालसाम्[13] ॥ इति मदालसा
स्फुटिताऽग्रे सृतौ वेगाद्भूस्पृशोः[14] पादपार्श्वयोः ॥ इति स्फुटिता
धरण्यां चरणाघातः पुत्ता(?) निगद्यते ॥१४६॥ इति पुत्ता ।
चरणः[15] स्वस्तिकाकारः कारितः[16] स्वस्तिका भवेत् ॥इति स्वस्तिका
निकुट्टना[17]न्मिथोऽङ्घ्रिभ्यामुद्धृताभ्यां पुराटिका ॥ इति पुराटिका ।
चरणोऽग्रे सरत्येको[18] यत्र सा सारिका मता ॥१४९॥ इति सारिका ।
पुरःसरणमङ्घ्रिभ्यां समाभ्यां स्फुरिता भवेत् ॥ इति स्फुरिका(?) ।

1. M. धो । 2. M. र । 3. M. त्वा ।
4. M. प्लोत्प्लु । 5. M. ध । 6. M. घा ।
7. M. भी । 8. M. व्यावर्तेते । 9 M. र्ध । 10. M. धः ।
11. M. ले । 12. M. री । 13. M. ता । 14. M. शो ।
15. M. ण । 16. M. त । 17. M. त्ता । 18. M. त्योको ।

यश्चान्यस्य पुरस्तं[1] च प्रसार्य चरणं यदि ।
निकुट्टयेद् भवेच्चेन[2] लताक्षेपा तु[3] दोलिता ॥१५१॥ इति लताक्षेपा
एकपादे स्थितः स्थाने भूस्थेन चरणेन चेत् ।
ऊरू[4] ताडयति प्रोक्ता तदा चार्यूरुता[5]डिता ॥ इति ऊरुताडिता[6]

इति देशीभौम्यश्चार्यः[7] ॥

अथा[8]काशिक्यः ॥

यस्यां पुरोऽङ्घ्रिमुत्क्षिप्य ललाटस्योपरि द्रुतम् ।
भ्रान्तयित्वा तु विन्यस्येद्विद्युद्भ्रान्ता तदादिशेत् ॥ इति विद्युद्भ्रान्ता
तताङ्घ्रि[9]रुत्प्लुत्याभीक्ष्णं निपाताद्ध[10]रिणप्लुता ॥ इति हरिणप्लुता
डमरी[11]कुञ्चितस्थाये(?) वामदक्षिणतो भ्रमात् ॥१५५॥ इति डमरी
यत्र स्वस्तिकमासूत्ल[12] प्रक्षिपेत्ति[13]र्यगूर्ध्वतः ।
चरणौ दण्डपादा सा चारी तज्ज्ञैः प्रकीर्तिता[14] ॥ इति दण्डपादा
ऊरौ पार्ष्णेन विन्यस्य पादं[15]यत्र प्रसारयेत् ।
तीक्ष्णं ग्रीवा(?) कृत्य नाम सूची चारी प्रकीर्तिता[16] ॥ इति सूची
कुञ्चिताकुञ्चितं पादमङ्घ्रिणाऽन्येन लङ्घयेत् ।
गगनं चेत्तदा[17]चारी जङ्घालङ्घनिका मता ॥ इति जङ्घालङ्घनिका

1 'पश्चात्परस्य पुरस्त्य' इति भवेद्वा । 2 M. वं तेन ।
3. M. पस्तु । 4 M. उत्तू । 5. M. र्यांजुत्ता ।
6. M. उरूत्ता । 7. M माचार्यो । 8. M. श्रथ ।
9. M. तावाग्रे । 10. M. ध । 11. M. र्यो. ।
12. M. छ्ल । 13. M. प्रोत्क्षिपे द्वि । 14. M. त. ।
15. M. द । 16. M. ल्ह । 17. M. गगणयेत् वेत्तदा ।

अङ्घ्रिं[1] कुञ्चितमुत्क्षिप्य पुरो विस्तीर्य वेगतः ।
विन्यसेदवनौ यत्र पुरः[2]क्षेपा तदा भवेत् ॥ इति पुरः[3]क्षेपा ।
वाह्यपार्श्वेन यत्नोर्ग(?) पृष्ठपृन्च्छेन(?) यत् पदम् ।
नितम्बनिकटे याति साऽपक्षेपा प्रकीर्तिता ॥१६०॥ इति अपक्षेपा ।
पुरोगगनभागे च प्रसार्य चरण मुहुः ।
आकुञ्चयेत्तदा चारी विक्षेपा सा प्रकीर्तिता ॥१६१॥ इति विक्षेपा ।
आ[कु]ञ्चि[4]तस्य पादस्य पुरतः पृष्ठतस्तथा ।
उत्क्षेपो[5] जानुपर्यन्तमुत्क्षेपा[6] कथ्यते बुधैः ॥१६२॥
इति [उत्]क्षेपा[7] ।
अङ्घ्रिणैकेन चेदन्य वेष्टयेद्वेष्टन तदा ॥१६३॥ इति वेष्टनम् ।
स चेत् पृष्ठे नयेत् पादौ पृष्ठो[त्]क्षेपमिम विदुः ॥ पृष्ठो[त्]क्षेपः ।
उल्लोला[8] स्याच्चरणयोः क्रमेण लोलनाद्भुवि ॥१६४॥ इति उल्लोला ।
ललिता/वनितामूर्तिरु[9]द्धृतश्चरणो भवेत् ।
यत्र[त]त्र प्रा[10]वृत. ज्ञेय मकरध्वजजीवनम् ॥१६५॥ इति प्रावृतम् ।
पादयोः स्वस्तिकस्यैक[:] कुञ्चितो दोलितः परः ।
कुञ्चितश्चरणो[11] यत्र सा विद्धा[12] वोध्यते बुधैः ॥ इति विद्धा[13]

इत्याकाशिक्य[:] ॥ इति देशीचार्यः ॥

1 M ङ्घ्रि । 2 M र । 3 M र । 4 चि ।
5 M उपक्षो । 6 M प । 7 M, प ।
8 M उल्लाल । 9 M उ । 10 M प्र ।
11 M या । 12 M धा । 13 M धा ।

[ अथ स्थानकानि ]

स्थानकान्यथ वक्ष्यामि स्त्रीपुंस-सञ्ज्ञितानि च ।
चत्वारि स्त्रीकृतानि स्युर्नरेषु रस कीर्तिताः ॥१६७॥

[ पुरुषस्थानकानि ]

समपादं च वैशाखं मण्डलं वैष्णवं तथा ।
आलीढ-प्रत्यालीढे तु एते षट् पुरुषेषु च ॥१६८॥
एकतालान्तरौ पादौ समौ सौष्ठवसंयुतौ ।
समपादं तदेव स्यात् स्थानं स्थानविदो विदुः ॥ इति समपादम्[1] ।
एकपादः समस्थितस्त्र्यस्रश्चाव[2]स्थितोऽपरः ।
सार्धं द्वे तारिता[3] जङ्घा किञ्चिन्नता[4] भवेत् ।
सौष्ठवं यत्र विज्ञेयं वैष्णवं स्थानकं परम् ॥१७०॥ इति वैष्णवम्[5] ।
भूमेरूर्ध्वनिषण्णौ[6]चेत् सार्धताल्लया[7]न्तरे ।
यदा त्र्यस्रौ चरणयोस्तदा वैशाखक[8]स्मृतम्[9] ॥ इति वैशाखम् ।
पक्षस्थौ चरणौ त्र्यस्रावेक[10]तालान्तरौ भुवि ।
कटिजानु[11]समौ[12]ज्ञेयौ मण्डलं तद्[13]विदुर्बुधाः ॥

इति मण्डलस्थानकम् ।

वामो[14]यत्र निषण्णस्तु[15]रेच्यते पूर्वमानतः ।
दक्षिणश्चरणश्चाग्रे पञ्चताला[न्]प्रसारितः ॥

1 M द । 2 M श्चश्चो । 3 M सार्धद्वितालान्तरिता' इति भवेत् ।
4 M वना । 5 M व । 6 M णौं । 7 M क्या ।
8 M का । 9 M ता । 10 M श्च एक । 11 M नु ।
12 M मो । 13 M त । 14 M मे । 15 M णो तु ।

अद्धावपितं (?)विधादालीढं स्थानकं परम् ॥१७३॥ इत्यालीढम् ।
आलीढाङ्गविपर्यास[ः] प्रत्यालीढमुदीरितम् ॥ इति प्रत्यालीढम् ।

इति षट् पुरुषस्थानकानि ॥

[ अथ स्त्रीस्थानकानि ]

वामस्तालान्तरस्त्रस्तो दक्षिणश्चरण[ः] समः ।
प्रसन्न[1] वदनं वक्षः समुन्नतं[2]कटी नता ॥१७५॥
कटीनितम्बगो हस्तो दक्षिणोऽन्यो[3]लताकरः ।
यत्राऽऽयत तदा स्था[4]नं कामभावप्रकाशकम् ॥ इति आयतम् ।
अवहित्य तदेव स्याद्विपर्यासेन यत्[5] कृतम् ॥ इति अवहित्थम्[5] ।
सम[6]स्यैकस्य पादस्य पार्ष्णिदेशगतोऽपरः ।
सूचीपादे स्वपार्श्वो वा समस्तालान्तरे[7]स्थितः ।
अश्वावरोहणारम्भे[8] तदश्वा[9]क्रान्तमिष्यते ॥ इति अश्वाक्रान्तम्[10] ।
गत्युन्मुखा[11] च यत्रैकं पादमुद्धृत्य नर्तकी ।
उदास्ते तद्गते स्थित्यौ निरोधास्यागताद्गती[12] ॥ इति गतागतम् ।

इति स्त्रीस्थानकानि ॥

1 M त । 2 M स्रो । 3 M प्मा ।
4 M ज । 5 M त्य । 6 M मे । 7 M. रो । 8 M स्नो
9 M स्वा । 10 M न्ता । 11 M खा । 12 'तद्गति-
स्थित्योर्निरोधः स्याद् गतागतम्' इति भवेत् ।

[ अथ देशीस्थानकानि ]

स्वस्तिकौ हसकस्थाने चरणौ कुञ्चितौ यदा ।
मिथ[ः]श्लिष्टकनिष्ठौ च तदाहु[ः]स्वस्तिकं बुधाः ॥

इति स्वस्तिकम् ॥

दक्षिणश्चरणो जानुवाह्यगुल्फवि[1]लक्षितः ।
वामः [2]समो भवेद्यत्र कूर्मा[3]सनमतो[4] विदुः ॥ इति कूर्मासनम् ।
विपुणे(?)संयुते वामे जानुनी संस्थिते क्षितौ ।
वृषभासनमाख्यात सौष्ठ[5]वाधिष्ठित तदा ॥ इति वृषभासनम्[6] ।

इति देशीस्थानकानि ॥

अथ [7]करणानि ॥

नर्त[8]को नर्त[9]नारम्भे समपादौ लताकरौ ।
कृत्वाऽङ्गं[10] चतुरस्रं च तदन्ते नृत्यमाचरेत् ॥१८९॥
पादौ-दक्षिणनिष्क्रामन् (?)
तथैव वामपार्श्वे च हस्तौ पुष्पपुटः (?) ।
तल[11]पुष्पपुट तस्मात् करणं प्रथ[मं]मतम्[12] ॥१९०॥
इति तलपुष्पपुटम् ।

ऊर्ध्वमण्ड[13]लिनौ हस्तौ कृत्वा हस्तोत्थिताञ्जलिः[14] ।
निहञ्चितांस[15] ग्रीवा च लीनं तत् करणं मतम् ॥ इति लीनम् ।

1. M. मि । 2. M. सा । 3. M. र्मो ।
4. M. नतो । 5. M. सोष्ठ । 6. M. नः ।
7. M. का । 8. M. र्त । 9. M. र्त ।
10. M. गं । 11. M. ल्प । 12. M. न ।
13. M. पिद । 14. M. ञ्जलिः ।
15. M. श ।

वामदक्षकराङ्घ्री[1] च पार्श्वे निष्कृष्यमानयोः (?) ।
उत्प्लुत्य युगपद् यत्र हस्ताङ्घ्रि[ः]स्वस्तिकः कृतः ।
तत्र स्वस्तिकमिति प्राहु[ः] करणं पूर्वसूरिभिः ॥ इति स्वस्तिकम् ।
खटकामुखवामस्थः[2] करिहस्तस्तु[3]दक्षिणः ।
पाउ स्वस्तिकां कृत्य[4] तदर्धस्वस्तिकं मतम् ॥ इति अर्धस्वस्तिकम् ।
अग्रत[ः]पार्श्वयोः पृष्ठे कराङ्घ्री[5] स्वस्तिकीकृतौ ।
त[द्]दिक्स्वस्तिकमुद्दिष्टं त[ज्]ज्ञैर्नयनसुन्दरम् ॥१९४॥
इति दिक्स्वस्तिकम् ।
समपादं भुवि स्थित्वा किञ्चिदुत्प्लुति[6]पूर्वकम् ।
करौ व्यावृत्तपद्मत्वं धत्ते स्या[7]दञ्चितं तदा ॥१९५॥ इति अञ्चितम्
तदेवैकाङ्घ्रि[8]रचितमेकपादाञ्चितं[9] मतम् ॥ इतिएकपादाञ्चि[10]तम
उपरिष्ठेन जङ्घायां तदन्यचरणस्थितौ ।
तत्ते(?) ततकृते यत्र तद्भवेद्भैरवाञ्चितम्[11] ॥ इति भैरवाञ्चितम्[12] .
चर्यो विद्धाऽञ्चितः पाद[ः]पर्यायाद् रचितः करः ।
यत्रोन्मत्तं तु तद् गर्वे सौभाग्यादि[13]समुद्भवे ॥१९८॥ इति उन्मत्तम्
उरगत्रासितां चारीं[14] कृत्वोत्क्षि[15]प्याङ्घ्रिकुञ्चितम् ।
ऊरू जानू कटी व्यस्तं यत्र यत्र विवर्तये[त्] ।
एको दोलाकरश्चान्यः[16] खटकोरगत्रासिकम् ॥ इति भुजङ्गत्रासितम्

1. M. धो । 2. M नस्या । 3 M. ष्ठ । 4 'पादौ तु स्वस्तिकीकृत्य' इति भवेद् । 5. M रोप्रा । 6. M. तुत्र नि । 7 M स्य । 8. M घ्रय । 9. M. चि । 10. M. चि । 11. M. चित । 12. M. चंचित । 13. M. दिद्र । 14. M. रो । 15. M. त्तोरि । 16. थान्य ।

आ[1] दौ तु[2] डमरी चारी ततो नूपुरपादिका[3] ।
तडिकेनैव[4] तद्धस्तं रेचितञ्च ततः परम् ।
लताहस्तं यत्न कृतं [तद्] नूपुरमुदाहृतम् ॥२००॥ इति नूपुरम् ।
हस्तिहस्तौ करौ पादपृष्ठे वृश्चिकपुच्छ[क]म् ।
सन्नत[5] दूरपृष्ठ च वृश्चिकं यत्न तद्[6] विदुः ॥ इति वृश्चिकम् ।
चरणं वृश्चिकं कृत्वा शीर्षे कृत्वाऽलपल्लवौ ।
चरणं तं निकुट्टेत[7] तदा वृश्चिककुट्टि[8]तम ॥ इति वृश्चिककुट्टि[9]तम्
वृश्चिकौ चरणौ कृत्वा करौ स्वस्तिकरेचितौ ।
किञ्चित्तु चलतो यत्न तदा वृश्चिकरेचितम् ॥२०३॥
इति वृश्चिकरे[10]चितम् ।
अञ्चि[11]तां प्रथमं कृत्वा दोलापादं ततो भवेत् ।
चक्रवद् भ्रमरी दत्ता[12] तदा स्याच्च[13]क्रमण्डलम् ॥इति चक्रमण्डलम्
कृत्वा वद्ध[14] स्थितावर्तामु[15]रोमण्डलिनौ करौ ।
उरोमण्डलसंज्ञ तु करणं परिकीर्तितम ॥ इति उरोमण्डल[16]म् ।
अङ्गुष्ठो वृश्चिकाङ्घ्रे श्चे[17]छला[18]टे तिलकं न्यसेत् ।
तदा ललाटतिलकं करणं परिकीर्तितम् ॥ इति ललाटतिलकम् ।

1. M. चा । 2. M. ब । 3. M. कम् ।
4. M. कैने । 5. M. त । 6. M. तं ।
7. M. द्दो । 8. M. पुवि । 9. M. चि ।
10. M. चरणरे । 11. M. चि । 12. M. त्वा ।
13. M. स्य च । 14. M. द्धा । 15. M. उ ।
16. M. ल । 17. M. ध । 18. M. ह ।

व्यावृत्तिपरिवृत्ताभ्यां यत्र दोलाकरो[1] भवेत् ।
चारीं[2] चापगतिं[3]कुर्यात्तदावृत्तं स्मृतं बुधैः ॥ इति आवृत्तम[4] ।
ऊर्ध्वज्ञानुर्य[5]दा चारी दोलापादा भवेदनु ।
करौ दोलौ तदा प्रोक्त करण दोलसंज्ञितम् ॥ इति दोलापादम् ।
श्रवणस्य करिकरो[6] दोलापादा यदा भवेत ।
गजवद्विचरेद्भूमौ गजक्रीडितकं भवेत् ॥२०९॥ इति गजक्रीडितम्
पृष्ठेऽङ्घ्रिः प्रसृतो भूमिश्लिष्टाङ्गुष्ठौ[7] लताकरौ ।
यदा तदा महापक्षिदुद्दे[8] गृध्रावलीनकम् ॥ इति गृध्रावलीनकम् ।
लताकरौ रेचितकौ वृश्चिकाङ्घ्रिः[9] समुन्नतम् ।
जठर यत्र कुर्वन्ति करणं गरुडप्लुतम् ॥२११॥ इति गरुडप्लुतम् ।
हरिणप्लुतया[10] चार्या[11] दोलाखटकहस्तकम् ।
हरिणप्लुतमाख्यातं ना[12]मोक्तविनियोगकम् ॥ इति हरिणप्लुतम् ।
वृश्चिकाङ्घ्रि[13] प्रकुर्वीत हस्ताग्र[14]रौ च रेचि[15]तौ ।
भ्रमरी क्रियते पश्चान्मयूरललित तदा ॥२१३॥ इति मयूरललितम्
कृत्वा च नूपुरां चारीं दण्डपादान्त[16] दिक्क[17]रः ।
दण्डवत् क्रियते यत्र दण्डपादन्त[18]दोदित[19]म् ॥ इति दण्डपादम्[20] ।

1 M रौ ।  2 M री ।  3 M ति ।
4 M वर्तं ।  5 M य ।  6 M करो ।
7 M ष्ठुष्ठांगुठौ ।  8 S R युद्धे, foot note बद्धौ ।
9 M ङ्घ्रि ।  10 M. ता ।  11 M र्य ।
12. M न ।  13 M ङ्घ्रि ।  14 M द्र ।
15 M रोखि ।  16. M त ।  17 क्क ।
18 M. स्त ।  19 M त ।  20 M दा ।

ऊर्ध्वमण्डलिनौ हस्तौ सूच्यङ्घ्रि[र्]ये[1]त वद्धया ।
विवृत्तो भ्रमरीं कुर्यात् परिवृत्तं तदुच्यते ॥२१५॥ इति परिवृत्तम्[2]
पृष्ठतो भ्रमितं पादं सर्वतो मण्डलभ्रमः ।
भ्रमयेच्चेच्छिरः[3]क्षेत्रे विद्युद्भ्रान्तं तदु[4]च्यते ॥ इति विद्युद्भ्रान्तम् ।
पार्श्वाक्रान्ता भवेच्चारी करौ पादानुगौ नयेत् ।
पार्श्वक्रान्तस्तदा ज्ञेयोऽभिन[5]ये वीररौद्रके ॥ [इति पार्श्वक्रान्तः]
कुञ्चितो[त्]क्षिप्तचरणस्तदधः खटकामुखः ।
वक्षस्य[6]न्योऽलपद्म[ः]स्याच्छीर्षे सूची च वि[7]स्मये ॥ इतिसूचीकरणम् ।
वधोपक्रान्तयो[8]श्चार्यो[ः] कृतयोर्ह[9]स्तयो[ः] पुनः ।
सत्प्रयोगानुग[त]योरपक्रान्तमुदाहृतम् ॥२१९॥ इति अपक्रान्त[म्]
अधोमुखा[10]ङ्गुली हस्तौ पताकौ च शि[11]रस्थलम् ।
आ[12]नीय परिवर्तेत निष्कान्योङ्घ्र्योसयोश्चयोः(?)[13] ॥२२०॥
मिथो मुखावधि[14]स्थाप्य स्वदेहाभिमुखाङ्गुलि ।
नितम्बाख्यौ विधीयेते नितम्बकरणं तदा ॥२२१॥ इति नितम्बः ।
अलाताङ्घ्रि पुरः कृत्वा द्रुतं स्थाप्य च टेटवत्(?) ।
तथैवान्यकराङ्घ्री च सिंहविक्रीडितं तदा ॥ इति सिंहविक्रीडितम्

1. M. य ।   2. M. सः ।   3. M. चिर ।
4. M. तोच्यु ।   5. M. र ।   6. M. स्य ।
7. M दि ।   8. M. योः ।   9. M. ह ।
10. M. खो ।   11. M. स्थि ।   12. M. च ।
13. २२० सङ्ख्यकः श्लोकः करणान्तरस्य लक्षणांशो न तु नितम्बस्येत्यनुमीयते ॥
14. M. दा ।

कृता तु ज[1]निता चारी मुष्टिर्वक्षोल्तताकरः ।
करणं जनित नाम क्रियारम्भादि तद्भवेत ॥ इति एल्काक्रीडितम्[2]
उरोदेशे च मलिनौ[3] करौ च खटकामुखौ ।
मण्डलस्थानके स्थित्वा स[4]न्निवेशमुदीरितम् ॥२२४॥ इति निवेशः ।
एको हस्तो रेचितः स्याद् वक्षस्य[5]न्योऽलपर्वतः ।
पार्श्वयोर्लोलित शीर्ष वैष्णवस्थानके स्थितः ।
पार्श्वयोर्विभ्रमेद् यत्र करण तच्च लोलितम् ॥२२५॥ इति लोलितम् ।
पार्श्वेन भ्रमरीं कृत्वा मण्डलस्थानके स्थितः ।
कृत्वा छिन्नां कटीमेका वाह्वो[ः] शिरसि पल्लवम् ॥२२६॥
करभ[6]ङ्गीतरेणैव यत्र विचतुरा[ः]कृता[ः] ।
आवृत्तय[ः] कटीछिन्न[7] तद्वि[8]स्मयनिरूपणे ॥ इति कटीछिन्नम् ।
स्वस्तिकौ स्खलितौ पादौ क्रमेण परिवाहितौ ।
शिरोदोलौ य[9]दा हस्तौ मद[10]स्खलितक तदा ॥ इति मदस्खलितम्
कृत्वा मदप्लुता चारीं स्वस्तिकोऽङ्घ्रिस्तद[11]ग्रतः ।
हस्तौ दोलौ सन्तत[12] तत् दधना(?)पसृतौ भवेत् ॥ इति सन्ततम् ।

1 M व । 2 अत्र जनितमिति लेहये एलकाकोडितमिति यक्षिखित तेनानुमीयते अत्र कश्चिद्ग्रन्थ स्खलित इति । 3 'च मलिनौ' इत्यत्र मण्डलिनौ इति भवेत् । 4 भरतागमे निवेशमिति पाठ । तन्नामाख्ये पुष्पिकायां च निर्बन्धश्चेदत्र सन्निवेश मिति पाठ कल्पनीय । 5 M स्यो । 6 M म । 7 M चिप्र । 8 M न वि । 9 M म । 10 M य । 11 M दा । 12 N, S सप्तत ।

दोलापादेऽङ्घ्रिगमना[1]गमने[2] हंसपक्षक· ।
अङ्गान्तरेऽपि कुरुते स्खलित तत्र प्रकीर्तितम ॥२३०॥ इति स्खलितम्
चारीं कृत्वा द्य[3]पक्रान्तामङ्घ्रि्मग्रे प्रसारयेत् ।
हंसपक्षो यदा हस्तावतिक्रान्तस्तदोदित·[4] ॥२३१॥ इति अतिक्रान्तम्
शकटास्या[5]भवेच्चारी प्रसर्पि[6]णाङ्घ्रि्णा सह ।
एको हस्तो द्वितीयस्तु व[7]क्षस्थः[8] खटकामुखः ।
यत्र तच्छकटास्य[9] स्याचाद्दशे बालखेलने ॥ इति श[10]कटास्यम् ।
चारीं[11] कृत्वा अलाताख्या[12]करौ कृत्वा तु रेचितौ ।
व्यावृत्ता[13]वलपद्मौ[14] च कुञ्चितौ बाहुशीर्षगौ ।
वृषभक्रीडित तस्मात्तज्ज्ञैः प्रोक्त मनोहरम् ॥ इति वृषभक्रीडितम् ।
समपादस्थितेरर्धं यत्र[15] त्रिकविवर्तितम्[16] ।
उत्प्लुत्य प[ति]त तिर्यक् लोहरी करणञ्च तत्र ॥२३४॥ इति लोहरी

इति करणानि ॥

॥ अथाङ्गहारा लिख्यन्ते ॥

इदानीमङ्गहाराणा लक्षण कथ्य[17]ते स्फुटम् ।
षड्भिः सप्तभिरष्टाभिर्नवभिर्वा यथारुचि ।
करणैरङ्गहारः स्यात् सग्रहे[18]णाधुनोच्यते ॥२३५॥

1 M न। 2 M ना। 3 M म। 4 M अत्र सर्वत्र क्लीबत्वमेव प्राकरणिकम्। 5 M स्याद् इत्यधिकम्। 6 M पसर्दि। 7 M वे। 8 M स्थो। 9 M स्या। 10 मूले सर्वत्र दत्त्यसकार। 11 M री। 12 M अलताद। 13 M त्ता। 14 M द्मौ। 15 M य अ। 16 M नम्। 17 M चि। 18 M ग्रहे। 'उद्ग्रहेनाधुनोच्यते' इत्यपि स्यात्।

## [ अङ्गहारोद्देशः ]

प्रथम[ः] स्थिरहस्त[1][ः] स्यात् ततः पर्यहस्तसज्ञकः[2] ।
सूचीविद्धो[3]ऽपविद्धश्च[4] ततश्चा[1]क्षिप्तनामकः[5] ॥२३६॥
उद्घाटितालयश्चान्यो[6] विष्क[2]म्भ[ः][7] स्यात् पराजितः[8][3] ।
विष्कम्भापसृत[4]श्चैव[9] मत्तक्रीडाभिधस्तथा[10] ॥२३७॥
रेचितस्वस्तिकाख्यश्च[11] पार्श्वस्वस्तिकसज्ञ[12][5]कः ।
वृश्चिकापसृतश्चान्य[13]स्तथाऽन्यो भ्रमराभिध[14][ः] ॥२३८॥
मत्तस्खलितनामा[15] च मदाद्[6] विलसितोऽपरः[16] ।
गतिमण्डलविज्ञेय[17][ः] परिच्छिन्नस्तथाऽपरः[18] ॥२३९॥
परिवृत्ताद्रेचितश्च[19] तथा वैशाखरेचितः[20] ।
परावृत्तो[21] ह्यलात[7]श्च[22] पार्श्वच्छेदस्त[8]तः[23] परः ॥२४०॥
विद्युद्भ्रान्तस्तथो[9][द्]वृत्त[24][25] आलीढो[26][10] रेचि[11]तस्तथा[27] ।
तथाच्छुरितसज्ञश्च[28] परो ह्या[12]क्षिप्तरेचितः[29] ॥२४१॥
सम्भ्रान्तोऽप्य[30][प]सर्पश्च[31] तथैवार्धनिकुण्टकः[32] ।
इति सख्याऽङ्गहाराणा द्वात्रिंशत् कथिता स्फुटम् ॥२४२॥

इत्युपदेशः[13] ।

1 M ख्या । 2 M ष्कु । 3 N S अपराजित । 4 M वि । 5. M क्षि । 6 M दा । 7 M द । 8 M स । 9 M मयो । 10 M लाटो । 11 M रोचि । 12 M ख्या । 13 'इत्युद्देश' इति स्यात् ।

अथ लक्षणम् ॥

हस्तौ प्रसार्य चो[त्] क्षिप्य समपाद विधाय च ।
स्वस्तिकापसृति पाणि स[व्य] मूर्ध्वं[1]प्रसार्य च ॥२४३॥
प्रत्यालीढं[2] च निष्पाद्य[3]निर्वर्त्य च निकुण्टकम् ।
ऊरू[द्] वृत्तमतः[4] कृत्वा [स्वस्तिका] क्षिप्तक तथा ॥२४४॥
नितम्बं करिहस्त च कटिच्छिन्न[5]मतः परम् ।
अङ्गहारद्वयस्याग्रे स्थिरहस्तं प्रकल्पयेत् ॥२४५॥ इति स्थिरहस्तः[6]
तलपुष्पपुटं पूर्वमपविद्ध विवर्तितम् ।
निकुण्टकविधानं स्यादूरू[7]द्वृत्तमतः परम् ॥२४६॥
आक्षिप्ताख्यं[8] ततश्चान्यमुरु[9]मण्डलसञ्ज्ञकम् ।
नितम्बं करिहस्तं च कटिक्षीणमतः परम् ।
क्रमेण यत्र पर्यस्त[ः] सोऽङ्गहार[ः]प्रकीर्तितः[10] ॥२४७॥ इतिपर्यस्तः
अलपल्लवनामादौ सूची चाक्षिप्तमेव च ।
आवर्तितं त्रिकुट्टं स्यादूरूद्वृत्तमतः परम् ॥२४८॥
आक्षिप्तसञ्ज्ञकं यस्मिन्नुरोमण्डलनाम च ।
करिहस्त कटिच्छिन्न सूचीविद्धः[11] स उच्य[12]ते ॥ इतिसूचीविद्धः।
यत्रापविद्धमादौ स्यात् सूचीविद्धमतः परम् ।
पाणि[13]नोद्वेष्टितेन स्यात् त्रिकस्य परिवर्तनम् ॥२५०॥

1 M र्धं । 2 M प्रयातात । 3 M त्वा ।
4 M त्तिनत । 5 M छीरा । 6 M स्तकम् ।
7 M स्यादद्वृत्तू । 8 M न्य । 9 M तो चान्य द्वृत्तु ।
10 पर्यस्तलक्षणम् आदर्शे द्विरावृत्तम् । 11 M द्ध । 12 M द्व ।
13 M. मणि ।

उरोमण्डलिनौ पाणी कटिच्छिन्नमतः परम् ।
अपविद्धाभिधानोऽयमङ्गहार[ः] प्रकीर्तितः ॥२५१॥ इतिअपविद्ध.[1]
नूपुरं करण पूर्वं विक्षिप्ताला[2]तके तत. ।
आक्षिप्तसञ्ज्ञक तद्वदुरोमण्डलनामकम् ॥२५२॥
अनन्तरं नितम्ब च करिहस्तमतः परम् ।
कटीछिन्न च यत्र स्यादाक्षिप्त[ः] सोऽङ्गहारक. ॥ इति आक्षिप्तः[3] ।
उद्वेष्टितापविद्धश्च हस्तश्चाङ्घ्रि‸नि[4]कुट्टितः ।
प्रकारेणाथ तेनैव वामपार्श्वे भवेत् पुनः ॥२५४॥
उरोमण्डलिनो पाणी[5] नितम्ब[.] करिहस्तक.[6] ।
कटिच्छिन्न चु यत्र स्याद् भवेदुद्धटित[7]स्तदा ॥ इति उद्घटित.[8] ।
उद्वेष्टितौ क्रमात् पाणी पादावपि निकुट्टितौ ।
कुट्टिताव[9] ञ्चितौ[10] स्यातामूरूद्वृत्तमत. परम् ॥२५६॥
चतुरस्र कर कृत्वा यत्र पादे निकुट्टनम् ।
करिहस्त कटिच्छिन्न विष्कम्भ[ः] स तु कथ्यते ॥ इति विष्कम्भ. ।
दण्डपाद[11] विधायाङ्घ्रि[12] विक्षिप्ताक्षिप्तक परम् ।
हस्तं च व्यसित वा[13]ममङ्घ्रिणा सह सर्पयेत् ॥१५८॥*

इति [मत्त]क्रीडाभिध ।

1 M द्धम् । 2 M शाल । 3 M सम् ।
4 M नि । 5 M णौ । 6 M कम् ।
7 M दुद्वृति । 8 M उद्वृतिम् । 9 M ताव ।
10 M वौ । 11 M द । 12 M चौघ्रि । 13 M चा ।
* अत: परमादर्शे खण्डित इति प्रतिभाति । परमत्र खण्डनसूचकं किमपि चिह्नं नास्ति । इति क्रीडाभिध इत्यत: परं आदर्श एव खण्डचिह्नं वर्तते इत्यस्माभिरपि यथादर्शं दत्तम् ।

× × × × ×

× × × × × ॥ इति परावृत्तः[1] ।

करण स्वस्तिकं पूर्वं हस्तौ च व्य[2]सितौ ततः ।

अला[3]तकं प्रयोक्तव्यमूर्ध्वं जानुनि कुञ्चितम् ॥२५९॥

अर्धसूची च विक्षिप्तमुद्वृत्ताक्षिप्तकं ततः ।

करिहस्त कटिच्छिन्नं यत्र स स्यादलातकः ॥ इति अलातः[4] ।

उर[ः]स्थले करौ कृत्वा प्रयु[5]जीतार्धजानुकम् ।

आक्षिप्तस्वस्तिकादूर्ध्वं त्रिकस्य परिवर्तनम् ।

उरोमण्डलिनौ हस्तौ नितम्ब[ः] करिहस्तकः[6] ।

कटीछिन्नं भवेद् यस्मिन् पार्श्वच्छेदः स कथ्यते ॥ इति पार्श्वच्छेदः

वामः सूचीक्रम[ः]कार्यो विद्युद्भ्रान्तश्च दक्षिणः ।

सूचीविद्धश्च[7] चरणौ[8] विद्युद्भ्रान्तस्ततः परम् ।

अनन्तरं परिच्छिन्नं स्वस्तिकान्तश्च(?)नामकम् ॥२६३॥ -

इति विद्युद्भ्रान्तः[9] ।

विधा[10]य नूपुर पाद पाणी पार्श्वमलम्बितौ ।

लताख्य च कटीछिन्नं भवेदुद्वृत्तकाभिधे ॥२६४॥ इति उद्वृत्त० ।

क्रीडाभिध इति न सम्यक् उद्देशानुसारेण मत्तक्रोड इति भवेत । भरतागमे तु मत्ताक्रीड इति नाम । एतेन पराजितस्य कियानशो नवम-दशमौ चाङ्गहारो खण्डिताविति ज्ञायते । प्रन्थे क्षिलित-खण्डितायो च एकादशादेकविंशतितानामङ्गहाराणां लक्षणानि खण्डितानीति ।

1 M त्तम् । 2 M व्य॥ 3 M त । 4 M ता ।

5 M यु । 6 M. कम् । 7 M क । 8 M ण ।

9 M इति अविमृतव्यापकम् । लक्षणमिदं खण्डितमिति प्रतिभाति ।

10 M दा ।

आलीढव्यं[1]सितौ हस्तौ यत्र स्कन्धे निकुट्टयेत् ।
[2]चरणे नूपुरो वामे दक्षिणेऽलातसंज्ञकः[3] ॥२६५॥ इति आलीढ[ः]

आधा[य] रेचितं पाणिं पार्श्वमानम्य[4] रेचयेत् ।
भूयश्चान्येन योगेन गात्रमानम्य[5] रेच[6]येत् ॥२६६॥
रेचितं करणं कुर्यादुरोमण्डलकं ततः ।
कटिच्छिन्नञ्च यत्र स्यादङ्गहारः स रेचितः[7] ॥२६७॥ इति रेचितः

करणान्नू[8]पुरादूर्ध्वं विकस्य परिवर्तनम् ।
करण[9]व्यंसितेनाथ भूयस्त्रिकविवर्तनम् ।
अलातकं विधायाथ सूचीं ततः प्रयोजयेत् ॥२६८॥
करिहस्तं कटिच्छिन्नं भवेदाच्छु[10]रिताभिधः[11] ॥२६९॥

इति [12]आच्छुरितः[13] ।

रेचितस्वस्तिकावङ्घ्री करावपि[14] तथाभिधौ ।
तेनैव विधिना भूयो[15] विश्लेषं परिचर्यं च[16] ॥२७०॥
उत्क्षे[17]पणं पुनश्चैव रेच[केनव] कम्पयेत् ।
उद्वृत्तकमथाक्षिप्तमुरोमण्डलकं ततः ।
यत्र स्यादङ्गहारोऽयं भवेदाक्षिप्तरेचितः ॥ इति आक्षिप्तरेचितः[18] ।

1. M ढारव्यं । 2. M क ।
3 M एतदपि लक्षणमसपूर्णमिति प्रतिभाति । 4. M. स्य ।
5. M. स्य । 6. M. क्षेव । 7. M तम् ।
8 M. नू । 9 M शो । 10. M छु । 11. M. धम् ।
12. M. छु । 13. M तम् । 14. M. भि । 15. M. या ।
16 M. य । 17. M. उद्दे । 18. M. तम् । व्याक्षिप्तरेचित इत्युद्देशे ।

विक्षिप्तमिव चेत् पादौ पाणिपादमुखानुगम् ।
कृत्वा सूचीमुख वाम पाद पश्चाच्च निक्षिपेत् ॥२७२॥
सव्यो वक्षस्थले हस्तो वामश्चैव लताकरः ।
आक्षिप्तक पुनर्यत्र पाद स्वस्तिकरेचितः ॥२७३॥
नितम्ब-करिहस्ताख्य उरोमण्डलक ततः ।
कटिच्छिन्नञ्च सभ्रा[1]न्तः सोऽङ्गहारो मनोहरः ॥ इति सम्भ्रान्तः ।
विधा[2]याड्भ्रिमपक्रान्त हस्त[3]व्यसित[4]मेव च ।
उद्वेष्टित ततः कार्यमर्धसूची ततः परम् ॥२७५॥
विक्षिप्त च कटिच्छिन्नमुद्वृ[5]त्तक्षिप्तक ततः ।
करिहस्त कटीछिन्न विधेयमप[6]सर्पिते ॥२७६ इति अपसपित[7] ।
नूपुराख्य कूम[8] कृत्वा तमेव द्रुतमा[9]क्षिपेत् ।
कार्या पादानुगौ हस्तौ त्रिकस्य परिवर्तनम् ।
करिहस्त कटिच्छिन्न यत्र सोऽर्धनिकुण्टकः ॥ इति अर्धनिकुण्टकः
द्वात्रिंशदङ्गहाराणां नाट्यनृत्यप्रयोगिणाम्[10] ।
इति लक्षणमस्माभिर्यथावत् प्रतिपादितम्[11] ॥२७८॥

इति द्वात्रिंशदङ्गहारा.[12] ।

1 M चा। 2 M या।, 3 M स्त। 4 M व्यस्तित।
5 M त्र मुद्धित्त। 6 M भषि। 7 M तम्। अपसर्प्य इत्युद्दशे।
8 M कर्म। 9 M म। 10 M णम्। 11 M त।
12 M र।

*Cf* सङ्गीतरत्नाकर, 7 796 97 —

अग्रानात्युचिते देशे प्रापण सविलासकम् ।
मातृकोत्करसम्पाद्यमङ्गहारोऽभिधीयते ॥
यद्वा हारो हरस्याद्य प्रयोगोऽङ्गैरिति स्मृत ॥

## अथ रेचकलक्षणम् ॥

ग्रीवारेचक एक[ः] स्यात्तत[ः]स्याद्धस्तरेचकः ।
कटीरेचकसंज्ञोऽन्यस्ततः स्यात् पादरेचकः ॥ इति रेचितचतुष्टयम् ।

## [ अथ नृत्यलक्षणम् ]

चतुर्विंशत्यभिनयैरसंयुतकरः क्रमात् ।
करानुगश्च चरणो[1] यथाशोभं तथाचरेत् ॥२८०॥
जाहरेति समुच्चार्य माचरेति पुनः स्मरेत् ।
चतुर्विंशकरैरन्ते क्रियते भ्रमरी[2] ततः ॥२८१॥
तदन्ते विजहीति कांऽ .... ।
× × × × इति नेरीं[3]प्रचक्षते ॥२८२॥ इति नेरीनृत्यम् ।
शब्दनृत्यन्तु कथितं शब्दा[4]क्षरसमुच्चरम् ।
अक्षरोपरि घातस्य शब्दान्ते भ्रमरी भ्रमन् ॥ इति शब्दनृत्यम् ।
सर्वाभिनयसंयुक्तं रसभावसमन्वितम् ।
लयतालसमाकीर्णं प्रबन्धादिविनिर्मितम् ।
स्वरपाटादिसंकीर्णं तन्नृत्यं गीतमंज्ञकम् ॥२८४॥ इति गीतनृत्यम्

## [ अथ चिन्दुगीतलक्षणम् ]

उद्ग्राहश्चान्तरं भोगे ध्रुवद्राविडभाषया ।
रागतालेन केनापि तद्[5] गीतं [6]चिन्दुसंज्ञकम् ॥२८५॥

1. M. रो । 2. M. क । 3. M. री ।
4. M. द । 5. M. तं । 6. M. तं चि ।

× × × गालस्तृ[1]तीयः शुद्धचिन्दुकः ।

[ कोलचिन्दुनृत्यम् ]

सार्धहस्तं परीमाणं[2] हुण्डिका चित्रवर्णिका ।
....हीत्वा च नृत्यं तत् कोलचिन्दुं[3] जगुर्बुधाः ॥२८६॥

[ वङ्गालचिन्दुनृत्यम् ]

करेके(?)जलपात्र स्यात् × × × कम् ।
गृहीत्वा नृत्यते यत्तु[4] तद्वङ्गालमुदाहृतम् ॥२८७॥

इति शुद्धचिन्दुनृत्यम्[5] ।

[ अथ कल्पनृत्यम् ]

द्वौ त्रयश्चतुनिर्वा(?)मिलित्वा यत्तु[6]नृत्यते ।
कल्पनृत्यं[7] च तत्[8] प्राहुर्नृत्यशास्त्रविशारदाः ॥२८८॥

इति कल्पनृत्यम् ।

इति परौजसंख्यि वंशान्वये मालिनीमनोहर-कामिनीकामपूरण-[9]
विरहिणी[10]विरहभञ्जन-सदावसन्तानन्दकन्दारिगजमस्तकां-
कुश-श्रीमत्ततारसाह्यात्मज-महमदसाहिविरचितायां
सङ्गीतमालिकायां नृत्याध्यायः समाप्तः ॥

॥ शुभं भवतु ॥

1 M त्रि । 2 M न । 3 M
4 M स्तु । 5. शुद्धचिन्दुनृत्यस्य लक्षणं संक्षिप्तं
6 M. स्तु । 7. M. त्यं । 8. I
9 M. न । 10. M णी ।

# APPENDICES

## 1 ABBREVIATIONS

AD —Abhinaya Darpana
NS —Natya Sastra
SM —Sangita Malika
SR.—Sangita-Ratnakara

## 2 BIBLIOGRAPHY

Abhinaya-Darpana By Nandikeśvara, Calcutta Sanskrit Series Ed Calcutta 1934

Abhinava Bharati By Abhinavagupta. See Natya Sastra By Bharata with the commentary Abhinava Bharati Kavyamala No 42 1894

Natya Sastra By Bharata Ed By Pandit Batuk Nath Sharma in the Chowkhamba Sanskrit Series Banaras 1929

Sangita Malika By Mahammad Shah (MS) For details see Introduction p 2

Sangita Ratnakara By Śarnga Deva Nihsanka with the commentary of Catura Kallinatha. Ed from Poona in the Ānandasrama Sanskrit Series, No 35 1896 by Mangesa Ramakrṣna Telang

## 3 GENERAL INDEX*



* For the numerous varieties of the different gestures and postures, etc., see list of contents of the Nrtyadhyaya of the Sangita Malika, Introduction, pp. 7—12